# श्री नृसिंहकवचम् ॥

संवत् १९९

श्री प्रविण प्रिन्टरी, वडगादी, मुंबई, ३.

## नृसिंहस्तोत्राणि ।



## ॥ श्री नृसिंहकवचम् ॥

श्रीगणेशायनमः अथापरं प्रवक्ष्यामि ह्यल्पमृत्यु हरंपरम् । उपायं यत्कृतेनाङ्ग शीघ्रं मृत्युर्निवर्तते ॥ १ ॥ नृसिंहकवचं नाम स्तोत्रं परमदुर्लभम् । यस्य धारणया

क्षिप्रमल्पमृत्युर्विनश्यति ॥ २ ॥ अरुण उवाच ॥ भगवन्देवदेवेश कृपया परयाऽधुना नृसिंहकवचं दिव्यं गुह्यं भक्ताय मे वद ॥ ॥ ३ ॥ सूर्य उवाच ॥ शृणु पुत्र प्रवक्ष्यामि नृसिंहकवचं शुभम् । यस्य विज्ञानमात्रेण नश्यन्ति सकलापदः ॥ ४ ॥ ग्रहबाधा प्रेतबाधा बाधा या कुलदोषजा । कृत्यया जनिता बाधा शत्रुबाधा स्वकर्मजा ॥ ५ ॥ शीघ्रं नश्यन्ति ताः सर्वाः कवचस्य

प्रभावतः । असाध्या ये च दुस्साध्या
महारोगा भयंकराः ॥ ६ ॥ सद्यो नश्यन्ति
पठनात्कवचस्यास्य सारथे । जलभीतिश्चाग्नि-
भीतिर्भीतिः शत्रुगणादपि ॥ ७ ॥ सिंह-
व्याघ्रादिजा भीतिः शीघ्रं सर्वा विनश्यति ।
संग्रामे दुर्गमेऽरण्ये संकटे प्राणसंशये ॥ ८ ॥
पठतो विजयो रक्षा सुखं सौभाग्यसंपदः ।
पुत्रसौख्यं राजसौख्यं धनसौख्यमृणक्षयः
॥९॥ कुटुम्बवृद्धिः कल्याणमारोग्यं विजयः

सदा । अल्पमृत्युभयं घोरं पाठादस्य विनश्यति ॥ १० ॥ अल्पमृत्युहरश्चात उपायो न परः स्मृतः । अल्पमृत्युहरं नाम कवचं चेदमुत्तमम् ॥ ११ ॥ सिंहप्रणादान्मत्तोऽपि गजेन्द्रस्तु पलायते । अल्पमृत्युस्तथा चास्य पाठात्सद्यो निरस्यते ॥ १२ ॥ सहस्रपञ्चकावृत्तिं पठेद्यः सुसमाहितः । अल्पमृत्युभयं तस्य प्रभवेन्नैव कर्हिचित् ॥ १३ ॥ नृसिंहो मे शिरः पातु पातु भालं

नृकेसरी । भ्रुवौ नृसिंहो मे पातु नृसिंहो नयनद्वयम् ॥ १४ ॥ नृसिंहो नासिके पातु कर्णौ पातु नृकेसरी । नृसिंहो मे मुखं पातु कपोलौ रक्षताद्धरिः ॥ १५ ॥ नृसिंहश्चिबुकं रक्षेत्कण्ठं पातु नृकेसरी । स्कन्धौ पातु नृसिंहो मे भुजौ पातु नृकेसरी ॥ १६ ॥ करद्वयं नृसिंहोऽव्यान्नृसिंहो रक्षतादुरः । नृसिंहो हृदयं पातु नृसिंहोऽव्यात्तथोदरम् ॥ १७ ॥ कुक्षिं नरहरिः पातु नाभिं पातु

नृकेसरी । बस्तिं च गुह्यदेशं च नृसिंहोऽ
व्यात्सदा मम ॥ १८ ॥ नृसिंहो जानुनी
पातु जङ्घे पातु नृकेसरी । पादौ गुल्फौ
सदा पातु नृसिंहो मम रक्षकः ॥ १९ ॥
अग्रतः पृष्ठतो मेऽव्यात्तथा पार्श्वद्वयं सदा
नृसिंहः सर्वगात्राणि मम रक्षतु सर्वदा
॥ २० ॥ नृसिंहो रक्षतात्पूर्वे वह्निकोणे
नृकेसरी । नैर्ऋत्यां नरसिंहोऽव्यान्नृसिंहः
पातु पश्चिमे ॥ २१ ॥ नृसिंहो वायुकोणेऽ

व्यादुत्तरेऽव्यान्नृकेसरी। नृसिंहोऽव्यात्तथेशाने

ह्यध ऊर्ध्वं समन्ततः ॥२२॥ जले सदा रक्षतु

मां नृसिंहः स्थलेषु मां पातु सदा नृसिंहः।

नभस्तले भूमितले समन्तान्नृकेसरी रक्षतु

सर्वदा माम् ॥२३॥ दुर्गाध्वदुर्गभवनेषु च

संकटेषु प्राणप्रयाणभयविघ्नसमुच्चयेषु ।

शीतोष्णवातरिपुरोगभयेषु युद्धे संकष्ट-

नाशनपरोऽवतु मां नृसिंहः ॥२४॥ छिनत्तु

चक्रेण सदाऽरिवर्गान्सर्वान्नृसिंहो मम

मृत्युरूपान् । असाध्यदुस्साध्यसमस्त-
रोगान्भिन्द्यान्नृसिंहः स्वगदाभिघातैः
॥ २५ ॥ प्रेतान्पिशाचान्सगणान्स्वनेन
शङ्खस्य विद्रावयता न्नृसिंहः । कूष्माण्ड-
बालग्रहयक्षरक्षः स डाकिनीः शाकिनिकाः
समस्ताः ॥२६॥ खड्गेन मे मृत्युनिसर्गपाशं
संछिद्य मां पातु सदा नृसिंहः । सदाऽ
पमृत्योश्च तथाऽल्पमृत्योर्विमोच्य मां रक्षतु-
नारसिंहः ॥२७॥ भक्तसंरक्षणार्थाय विदार्य

स्तम्भमुद्गतः । नृसिंहो रक्षकः सोऽस्तु
मृत्युः किं मे करिष्यति ॥२८॥ अट्टाट्टहासतो
यस्य सर्वे देवाश्चकम्पिरे । नृसिंहो रक्षकः०
॥२९॥ हिरण्यकशिपोर्वक्षो ददारनिशि-
तैर्नखैः । नृसिंहो रक्षकः० ॥३०॥ यस्य
भ्रूभङ्गमात्रेण त्रस्तमासीज्जगत्त्रयम् । नृसिंहो
रक्षक० ॥३१॥ उत्क्षिप्तसटया व्यग्रा देवा
दैत्या विदुद्रुवुः । नृसिंहो रक्षकः० ॥३२॥

यन्नामस्मरणादेव दह्यन्ते विघ्नराशयः ।
नृसिंहो रक्षकः० ॥३३॥ यदङ्घ्रिध्यानतःसद्यो
विलीयन्तेऽघराशयः । नृसिंहो रक्षकः०
॥३४॥ माता नृसिंहश्च पिता नृसिंहो भ्राता
नृसिंहश्च सखा नृसिंहः । बलं नृसिंहो द्रविणं
नृसिंहः सर्वं नृसिंहो मम देवदेवः ॥३५॥ इति
ते कथितं पुत्र नृसिंहकवचं शुभम् । अस्य
धारणतः पाठादल्पमृत्युः प्रशाम्यति ॥३६॥

शतं वाऽथ तदर्धं वा तदर्धं वा स-
दक्षिणम् । विप्रेभ्यः पुस्तकं दद्यादल्पमृत्यु-
प्रशान्तये ॥ ३७॥

इति श्रीसूर्यारुणसंवादे अपमृत्युहरं
नृसिंहकवचं समाप्तम् ।



